–अर्थात् फिल्मगताः । रम्भादयः पत्रिकाः – अश्लील-वर्णनादिभिः लब्धवर्णाः । नैलानं वसनम् – नायलॉन। तदुक्तं गीतासु – 'नैलानं चास्मि वस्त्राणां पेयानां च चहास्म्यहम् । गुण्डानां राजनीतिज्ञो नटो धनवतामहम् ॥'

FOURTEEN JEWELS

Cigarette, '*bhel*' and '*puri*', tea, film actors, actresses, transistor radios, film songs, film periodicals, theatres, (sex-) magazines like the '*Rambha*', nylon, beauty aids, classes and guides, – may all these fourteen jewels bestow blessings on you every day !

नवीं चौदा रत्नें

बिडी-सिगरेट, भेळपुरी, चहा, सिनेनट, सिनेनटया, ट्रांझिस्टर रेडिओ, फिल्मी संगीत, फिल्मी नियतकालिकें, सिने-थिएटरें, 'रंभा' इत्यादि मासिकपत्रिका, नायलॉन कापड, सौंदर्यप्रसाधनें, क्लास आणि गाइडें, – अशी हीं चौदा रत्नें प्रत्यहीं आमचें सतत भलें करोत !



भाग्यवत्याः भर्ता

आहूतः सकृदेव यः प्रचलति स्नानाय भोजनाय वा,
नादिष्टः समये हरत्यथ चहाशाकादिवस्तूच्चयम् ।
यत्स्वल्पं, न निषेधति व्ययविधौ, रक्षत्यपत्यं मुदा, –
कस्याश्चित् क्वचिदेव भाग्यवशतो भर्ता भवेदीदृशः ॥

सकृदेव – इदम् 'आहूत' विशेषणम् ।

### Ideal Husband

A husband who rises for bath or meals at a single call, brings provisions like tea and vegetables in time without being reminded of it, talks little, does not impose restrictions on expenditure, baby-sits willingly, – only rarely and luckily can a woman have such a husband !

### भा ग्य व ती चा न व रा

जो एका हाकेसरशी आंघोळीला किंवा जेवायला उठतो ; सूचना मिळण्याची वाट न पाहता वेळेवर चहा, भाजी वगैरे वस्तु आणून ठेवतो; थोडेच बोलतो; खर्चाला आडकाठी करीत नाही; मुलाला खुषीने सांभाळत बसतो;–असला नवरा कुठेतरी एखादीलाच मोठ्या भाग्यानेच लाभतो !



### भा ग्य व त: भा र्या

नाश्रान्तं, यदि वक्ति; विघ्नयति वा कार्ये न भट्टारकं,
नैनं लुम्पति, नापि पृच्छति ' कुतः क्वार्यं धनस्य व्ययः ?'।
निद्राणं सहते, न शास्ति, रुचिरं प्रीणाति खाद्यं सदा,–
कस्यापि क्वचिदेव भाग्यवशतो भार्या भवेदीदृशी ॥

ना श्रा न्तं, य दि व क्ति – एतदुक्तं भवति : प्रायेण नैव वक्ति; वक्ति चेत् अश्रान्तम् अविरतं न वक्ति।

### IDEAL WIFE

A wife who, if at all she talks, talks not to the point of exhaustion, does not interrupt her husband in his work, does not rob him, nor does require him to give explanation for the expenditure, tolerates his sleep, does not dictate, cooks tasty food regularly, – only rarely and luckily can a man have such a wife !

### भाग्यवंताची बायको

बोलतील तर दमछाक होईतो बडबडत नाही; नवऱ्याच्या कामांत वटवटी घालीत नाही; नवऱ्याला लुबाडीत नाही, किंवा त्याला खर्चाचा हिशेबहि विचारीत नाही; भरपूर झोपूं देते; हुकमावर हुकूम सोडीत नाही; रोज कांहीतरी रुचकर पदार्थ खायला करिते; – असली बायको पुरुषाला एखाद्यालाच मोठ्या नशिबाने लाभते !



### आर्यपुत्राष्टकम्

कार्यं चेन्मुखमार्जनादि दुहितुस्तत्रार्यपुत्रो व्रजेत्,
कार्यं पुस्तकलेखनादि, तदपि द्रागार्यपुत्रः स्रियात् ।
शास्त्रार्थं स, पटादिकं स रजकात्, क्षौरं स, चित्राणि सः,
– क्षिप्रं संदिशती प्रियेक्षत इव प्रीत्यार्यपुत्राष्टकम् ॥

अत्र मुद्राराक्षसीयं राक्षसवाक्यं स्मर्तव्यम् – ' यत्रैषा मेघनीला चरति गजघटा राक्षसस्तत्र यायात् ... अग्रामीः

प्रीतियोगात् स्थितमिव नगरे राक्षसानां सहस्रम् ॥' नन्दानां तावत् ' नवनवतिशतद्रव्यकोटीश्वराणां ' सहस्रसंख्या कल्पवर्तः । नास्माकं तावान् विभवः ; अतः ' अष्टकेन ' तृप्यामः ।

EIGHTFOLD HUSBAND

The daughter is to be washed and tidied up etc., etc., – let my husband attend to it. A book or an article is to be written, – my husband will do that too in no time. Scientific work, – husband; bringing clothes from the launderer, – husband; milk, – he; drawing pictures, – who else ?

Issuing such orders in quick succession, the dear lady, with deep affection and full confidence, visualises an eightfold husband !

आठ नवरे

मुलीचें तोंड धुणें 'वगैरे' करायचें आहे, – 'हे' करतील की ! पुस्तकविस्तक लिहायचें आहे, – तें तर 'हे' चुटकीसरशी करतील ! शास्त्रचर्चा करायची आहे, – 'हे'; धोब्याकडून कपडे वगैरे, – 'हे' ; दुधाच्या बाटल्या, – 'हे' ; फोटोबिटो, – 'हे' ! असे लागोपाठ हुकूम सोडणाऱ्या बाईसाहेबांना अति प्रेमामुळे जणूं एका नवऱ्याचे आठ नवरे दिसूं लागतात !

□

स्म र ण शी ला भा र्या

'नित्यं विस्मरसी'त्यविस्मरणया प्राध्यापको भार्यया
भौमीयोद्वहनाय मित्रदुहितुः सोपायनं प्रेषितः।
तूर्यं नात्र कथं? न तारररसितं 'कुर्यात् सदा मङ्गलम्'?
सप्ताहात् परतो विवाह इति सोऽवेदीत् पठन् पत्रिकाम्॥

प्राध्यापकः हि नाम जनः विस्मरणस्य भूमिः,इति प्रथितं लोके। तस्य भार्या च प्रायेण अतीव स्मरणशीला, तेनैव किल जगच्चक्रम् अनाकुलं प्रवर्तते। अस्मिन् पद्ये ईदृश्येव काचित् जगच्चक्रयोगक्षेमकरी स्मरणखनिः निदर्शिता, या स्मृतेः अतीव तीव्रत्वात् आगामिनि सप्ताहे वर्तिष्यमाणस्य उत्सवस्य कृते पूर्वस्मिन्नेव सप्ताहे भर्तारं प्रेषितवती! भौ मी यो-द्व ह ना य – भौमे (मङ्गलवासरे) संपत्स्यमानस्य विवाहस्य कृते।

STRONG MEMORY

Taunting her husband, 'You are always forgetful,' a Professor's wife, (naturally) strong in memory, sent him with presents to attend the marriage ceremony of a friend's daughter scheduled to take place on a Tuesday.

(As he went to the place of marriage –) 'How is it that there is no sound of band here? Nor loud roars of "*kuryat sada mangalam*" (verses sung at the marriage ceremony, meaning, '..may ..always confer blessings') ?' He looked at the invitation, — the marriage was scheduled on Tuesday all right, but only a week later!

### आठवणीचा कांदा

'तुम्ही नेहमीच विसरत असतां!' असें एका प्राध्यापकाला त्याच्या बायकोनें (नेहमीप्रमाणे) म्हटलें, आणि एका मित्राच्या मुलीचें लग्न मंगळवारी व्हायचें होतें त्याला हजर राहण्यासाठी भेटीची वस्तु देऊन हाकललें. (कार्यालयात जाऊन पाहतो, तों —) 'इथे वाजंत्री का नाही? आणि "कुर्यात् सदा"चा आरडाओरडाहि कसा नाही?' त्यानें खिशातून निमंत्रणपत्रिका काढून पाहिली, — लग्न पुढच्या मंगळवारचें होतें!



### कोऽयम्?

'कोऽयं सायमुपागमिष्यति गृहं?' भर्त्रेति पृष्टा सती
ब्रूते भद्रमुखी, 'स्नुषा ननु धृता मातृष्वसुर्या मम।
तस्या मातुलमातुलस्य दुहितुः श्वश्र्वा ननान्दुः सुतो
यां जायां धृतवान्, पितृष्वदुहितुस्तस्या भविष्यद्वरः'॥

नायं कूटश्लोकः। तदलं संबन्धनिर्धारणार्थं वृथा शिरःपीडनेन। संबन्धपरम्परास्मरणपाटवमात्रमत्र भद्रमुख्याः गुणनयिपितम्।

### Who?

'Who is it that is coming to our house this evening?' asked the husband.

The lady with an auspicious face replied: 'He is the would-be bridegroom of the daughter of the uncle of the girl, to whom has proposed the son of the husband's sister of the mother-in-law of the daughter

of the maternal uncle of the lady, who is the prospective daughter-in-law of my maternal aunt.'

हा कोण ?

'हा जो संध्याकाळी आपल्या घरी ( चहाला ) येणार आहे, तो कोण ग ?'

नवऱ्याच्या या प्रश्नाला बायकोनें उत्तर दिलें : 'अहो, माझ्या मावशीची जी असणारी सून होणार आहे ना, तिच्या मामाच्या मामाची जी मुलगी, तिच्या मामूच्या नणंदेच्या मुलाचें जिच्याशीं लग्न ठरलें आहे ना, तिच्या चुलतबहिणीचा हा भावी नवरा व्हायचा आहे !'



उद्वर्तनम्

'उत्तप्तान्यनले पतन्ति सहसा दुग्धान्यवज्ञाय मां,
दूरे यावदहं करोति कलशं प्रोटिर्जलोत्प्लावितम् ।
पात्राणि प्रलुठन्ति हन्त चरणस्पृष्टान्यनालोकनात्,
उद्वृत्तं सकलं घने'ति गृहिणी कार्यं बभञ्ज क्रुधा ॥

सद्वृत्तानि दुग्धानि उत्तप्तानि सन्ति स्वयमेव चुल्ल्याः सत्वरम् अवतरन्ति, सद्वृत्ता प्रोटिः ( जलवाहिनी नलिका ) कलशं पूरयित्वा स्वयमेव विरमति, पात्राणि चरणमार्गात् स्वयमेव अपसरन्ति, इति ज्ञेयम् ।

DISOBEDIENCE

'The milk, when overheated on the stove, jumps into the fire in defiance of my

order ! While I am away, the water tap makes the bucket overflow ! The utensils too, alas ! if the feet touch them by chance, tumble on the floor ! Everything here is lawless ! '

With these words, the housewife crashed a glass in fury.

वळणच नाही !

' दूध तापत ठेवलें, सर ते खुशाल मी परत यायच्या आंत उतू जातें ! जरा कुठे इकडे तिकडे जावें, तों नळाखाली लावलेली कळशी वाहून जाते ! चुकून दुर्लक्ष होऊन पाय लागला, तर भांडींसुद्धा मेली आडवी होऊन गडगडा लोळण घेतात ! बाई बाई बाई ! ! या घरात कशाला म्हणून वळणच नाही ! ' असे म्हणून सुगरणीने हातांतले काचेचें भांडें रागारागाने दाणकन् आपटून फोडलें !



त्वं मदधिका

यावत् ते स्तवनं प्रियं मम, ततो मद्दूषणं ते प्रियं ;
यावच्छ्रोतुमना अहं, तदधिकं त्वं वक्तुकामासि यत् ।
अत्तुं यावदहं क्षमस्तदधिकं श्रीणासि भोज्यं यतः ;
यावानर्जयितास्म्यहं तदधिकं युक्तं करोषि व्ययम् ॥

कश्चित् 'सः' 'तां' प्रति आह ।

YOU ALWAYS EXCEED ME !

You like to censure me more than I like to praise you. You wish to speak more than I wish to hear. You cook more than

I can eat. It is then perfectly appropriate that you spend more than I earn !

तूं माझ्याहून अधिक !

तुझी तारीफ करायला मला जेवढें आवडतें, त्याहून अधिक मला नांवें ठेवणें तुला आवडतें. मला जेवढें ऐकावेंसें वाटतें, त्याहून अधिक तुला बोलायला हवें असतें. माझी जेवढें खाण्याची तयारी असते, त्याहून अधिक तूं अन्न शिजवून ठेवतेस. तेव्हा मी जितकें कमावतो, त्याहून अधिक तूं खर्चतेस, हें सरळच नाही का ?



गुरुलाघवम्

व्याख्यानं न, न नाटकं, न च चलच्चित्रं, न संमेलनं,
संभूयभ्रमणं न नोऽस्ति सुलभं, देशाटनं दूरतः ! ।
अस्त्यस्माकमवेक्षणीयमनिशं संमार्जनीयं गृहं,
कर्तव्यं पटधावनं, तरुलताः सेच्याः, विधेया चहा ।।

DISCRIMINATION

No lecture, no play, no picture, no gathering; even walking together has become difficult for us, much more so a pleasure trip. For, we have to watch the house constantly, sweep it, wash clothes, water plants and prepare tea !

तारतम्य

ना व्याख्यान, ना नाटक, ना सिनेमा, ना सभासंमेलन, ना हिंडणे फिरणें, – कांही काही म्हणून आम्हांला करिता येणार नाही. प्रवास तर दूरच ! कारण आम्हांला कौ नाही, घराची सतत राखण

करायची असते; झाडलोट असते ; धुणें, झाडांना पाणी, चहा, – हे सगळें करायचें असते. वेळ काढायचा तरी कुठून ?



प्र स व स मृ द्धिः

यद् देवाद्युपयाचनं, यदपि वा बाबाबुवाद्यर्चनं,
यद् भैषज्यनिषेवणं च नियतं, यन्मान्त्रिकोपासनम् ।
मूढानामनपत्यतापरिहृतेः सर्वेऽप्युपाया इमे ;
सुन्तामात्रसमाश्रयात् तु विबुधाः प्राज्यां प्रजां चक्षते ॥

सु न्ता – इस्लामप्रथितः पुमपत्यसंस्कारविशेषः । (प्राज्ञाः! नातः परं कथयितुं शक्यम् ।) वि बु धाः – नचिरात् दिवं गताः केचित् महाराष्ट्रियाः इतिहासपण्डिताः। तेन प्रकृतपदं सविशेषम् अर्थवत् भवति ('विबुधाः सुराः' इत्यमरः ) ।

FERTILITY

Vows of offering to the deities, devout service of saintly *Babas* and *Buwas*, regular administration of medicines, devotion to the spell-priests, – all these are the fools' measures to beget a child. But the wise men ( e. g. a recently departed scholar of Mahratha history ) assure abundant progeny just by an operation of the *Sunta* rite !

उदंड संतति !

देवादिकांना नवस, बाबाबुवांची सेवा, नियमित औषधसेवन, मांत्रिकाचे आर्जव, आणि काय काय, – मूल व्हावें म्हणून गुळचट

लोक काय उपाय करीत असतात ! शहाणे लोक ( नुकतेच दिवंगत झालेले एक इतिहासपंडित ! ) मात्र सांगतात की, नुसती 'सुंता' केली की पुरे ! मुलेंच मुले !!



'तालं तालय'

**जाता जातु विलाप्य वक्षसि दृढं पित्रा भृशं चुम्बिता,**
**दष्टा कोमलयोः कपोलफलयोः शल्योपमैः श्मश्रुभिः।**
**मातुः संस्पृशती मुखं मृदु सुखं सभ्रूविभङ्गाब्रवीत् –**
**'तालं तालय !'; न त्वबुद्ध जननीहासस्य मुग्धाशयम्॥**

जाता – वत्सा। विलाप्य – विपूर्वायाः लीयतेः ण्यन्तायाः ल्यबन्तम्; आश्लिष्य इत्यर्थः। मृदु सुखम् – हे भगवन्! कियान् अयं भेदः! किमिति तातस्यापि मुखम् ईदृगेव न निर्मितम्? तालय – ताडय। अबुद्ध – अजानात्। मुग्धा – अर्थात् जाता, कन्या; कर्तृपदम्। मुग्धा नावुद्ध; विदग्धाः बुध्येरन् इति आशास्महे।

Beating the Father

The father once kissed his young daughter heavily, clasping her to his heart; and the fruitlike, delicate cheeks of the poor child were bitten by the father's arrowlike moustaches. The girl then feeling the soft, snug face of her mother, passed the sentece with knitted eyebrows, ' Give papa a

beating !' The mother burst into a laughter; but the innocent child could not divine why.

### बाबांना ठोक दे !

एकदा असे झाले की, एका पित्याने आपल्या लाडक्या बाळीला छातीशी घट्ट धरून तिचे मुक्यावर मुके घेतले. बिचारीचे कोवळे कोवळे गाल मिशाचे काटे टोचून टोचून हुळहुळे झाले ! सुटका झाल्याबरोबर तिने आईकडे धाव घेतली; तिच्या मुलायम तोंडावर एकदा हात फिरविला ( देवा रे देवा ! सगळ्यांचीच तोंडें अशी गुळगुळीत कां नाही केलीस ? ), आणि आठ्या घालून आईला म्हटलें, ' आई ग, बाबांना की नाही, खूप ठोक दे ! ' आई खदखदून हसली. बिचाऱ्या अश्राप मुलीला तिच्या हसण्याचा अर्थ कळलाच नाही !



### ' अ प भा पि त वै '

' यक्तां तात फुगां गिह्लान, घयपीम् आम्ब्यस्य माम् आनय,
श्योकं पायय नूतनं, कथय वा कयुत्नत्य मय्यं कथाम् ।
तुम्यं देव नमच्चकयोमि, तुमती तातत्य मे दीयतां, ' –
मा भूत् साधुपदप्रयोगसुकृतं, जाते ! प्रियं ते वचः ॥

अत्र चरणत्रयस्य संस्कृतच्छाया – ' रक्तां तात फुगां गृहाण, घरफीमाम्रस्य मामानय, श्लोकं पाठय नूतनं, कथय वा कृष्णस्य मह्यं कथाम् । तुभ्यं देव नमस्करोमि, सुमति-

स्तातस्य मे दीयताम्'। फुगा – वलून। बरफी – खाद्य-विशेषः। मा भूत्... – अत्र अनुसंधेयम् : 'तस्माद् ब्राह्मणेन न म्लेच्छितवै, नापभाषितवै' इत्यादि महाभाष्ये उद्धृतं श्रुतिवचनम्। तथा च – 'समानायामर्थावगतौ शब्देन चापशब्देन च, तत्र धर्मनियमः क्रियते, शब्देनैवार्थोऽभिधेयो नापशब्देनेति, एवं क्रियमाणमभ्युदयकारि भवतीति।'

### In Defence of Unrefined Speech

(This stanza is untranslatable; for a three-fourth of it is composed in baby talk. Its interest lies more in its pronunciation than in its contents.)

'Papa! Buy me the red balloon. Bring me the mango sweets. Teach me a new verse or tell me the story of Krishna. God! I bow to you! Make my papa wise.'

Confound the refined speech that brings merit! Baby dear, I love your talk!

### बोबडे बोल

'तात, मया (मला) याय (लाल) फुगा आना;' 'मया आंब्याची बफी घेऊन या;' 'मया नवा स्योक (श्लोक) शिकवाय?' 'क्रुष्णाची गोस्त सागाय?' 'बाप्पा, तुया नमस्काय! बाप्पा, तातांना चागयी बुद्धी दे!'

शुद्ध बोलल्यें की पुण्य लाभतें म्हणतात तें नाही मिळाले तरी फिकीर नाही! बाळ, तुझे हे अशुद्ध बोबडे बोलच मला प्यार आहेत!

□



### बाल्याय तस्मै नमः

सायं द्योतितदीपवन्दनविधेरूर्ध्वं
जनन्योदितं,
'तातादीनघुना नमस्कुरु सुते !'
वत्सा च भक्त्यानमत् –
अम्बां तातमथानयोः पितृगणं
भ्रातॄन् स्वसॄः किंकरान्
मार्जारं शुकमप्यहो !
समदृशे बाल्याय तस्मै नमः ॥

समदृशे – अत्र विमृश्यतां मदुक्तं गीतासु : 'विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥'

### WE BOW TO THE CHILDHOOD

The evening prayer to the lighted lamp was over. The mother bade her daughter, 'Now, baby dear, bow to your father and others.' The child then piously bowed to her mother, father, their parents, brothers, sistrers, servants, – nay, even the cat and the parrot in the cage too !

We bow to the childhood which is endowed with such a perfect equanimity !

### त्या बाळपणाला नमस्कार असो !

संध्याकाळीं दिवे लागल्यावर 'शुभं करोति' म्हणून झाले. मग आईने छिमण्या लेकीला सांगितलें, 'बाळ, आता बाबांना आणि

सगळ्यांना नमस्कार कर हं ! ' तेव्हा तिने पुढील व्यक्तींना भक्ति-भावाने नमस्कार केला, --आई, बाबा, त्यांचे आईवडील, भाऊ, वहिणी, नोकरचाकर, मांजर आणि पोपटसुद्धा ! असली समदृष्टि बाळगणाऱ्या त्या बाळपणाला आमचा नमस्कार असो !



विजल्पितम्

'कृष्णो नाम बभूव, तस्य जननी कॉलेजमासीद् गता,
सोऽखादन्नवनीतमन्यसदने, बद्धस्तदोलूखले ।
सोऽरोदीत्,उपधाव्य चास्य जननी मुक्त्वाददाद् गोलिका:,'
– मत्तस्येव शिशोर्विजल्पितमिदं गेहे चिरं जीवतु ।।

कश्चन शिशुः जनन्यै कथां कथयति । सेयम् । गोलिका: – शार्करी: ।

PRATTLE

'There was one, *Krishna.* His mother had gone to the College. He stole butter from others' houses and ate it. Then he was tied to a wooden mortar. He cried; and soon his mother ran back, relieved him and gave him lemon balls.'

May this prattle of the baby, similar to that of a madman, live forever in the house !

## बडबड

'एक होता कृष्ण. त्याची आई गेली होती कॉलेजांत. त्याने एकदा लोकांच्या घरी (चोरून) लोणी खाल्लें. तेव्हा लोकांनी त्याला उखळाला बांधून घातले. मग तो लागला रडायला. मग त्याची आई आली धावत धावत. तिने त्याला सोडवले; आणि सिमलेटाच्या गोळ्या दिल्या खायला.' असली वेडगळासारखी लहान मुलाची बडबड घरांत कायम नांदी !



## धस्यामरणिः

'मा माता सुत निष्कुपाण, वदने मा पुत्र धेह्यङ्गुलिं,
मा निष्ठीव पथि क्वचित्, कमपि रे बालोपदेशं शृणु'।
ज्येष्ठा इत्यवनित्यमाप्तवचनाः प्राहुस्तदा रत्नाः; परं
कस्यासत्यमृतादिकं नु मुखामास्या ? न जानीमहे । ॥

## नसती उठाठेव

'हें वघ वाळ, नाक टोकरूं नको;' 'तोंडांत बोट घालूं नको;' 'रस्त्यांत थुंकायचें नाही हं;' 'हां, शिवी नाही द्यायची कुणाला!' असें कांहीतरी मोठी माणसें सारखी सांगत असतात; स्वतः मात्र हें सगळें करीत असतात. तें जाऊं द्या! पण मला हें समजत नाही की, आम्ही हें सगळें आमच्याच हातांतोंडांनी करीत असताना यांना त्यांत लक्ष घालण्याचें काय कारण ?



## ११. तत्त्ववित्पद्धतिः

### THE WAY OF THE THINKER

### त त्त्व ज्ञ प्र क र ण

श्ली ला श्ली ल वि वे कः

**विद्वांसोऽपि गता यतोऽत्र विमतिं 'का श्लीलताश्लीलता?**
**श्लीलेऽश्लीलमतिं यतो विदधतेऽश्लीलेऽपि च श्लीलताम्।**
**तत्त्वं तेन समासतो विवृणुमः – सर्वेऽपि यत्रोत्सुकाः,**
**अश्लीलं तदुदीर्यते; यदितरत्, श्लीलं तदाख्यायते ॥**

कर्म इव एव गहनोऽयं विषयः – 'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः'; तथा 'कर्मण्यकर्म यः पश्येत् ...' इत्यादि स्मर्तव्यम्। यस्मादेवं तस्मात् – '( तेन ) ब्रूमः सहृदयमनःप्रीतये तत्त्वरूपम्।'

DISTINGUISHING DECENT FROM OBSCENE

Whereas even the learned are divided as to what is decency and what obscenity;

and whereas they even regard as obscene what is really decent, and as decent what is really obscene; therefore we briefly expound the true nature of these two : obscene is that *in which all are interested*; all the rest is decent.

श्लील आणि अश्लील

'श्लील म्हणजे काय, आणि अश्लील म्हणजे काय,' या मुद्द्यावर विद्वानांचेसुद्धा मतभेद झाले आहेत; कोणी तर श्लीलालाच अश्लील समजतात, आणि अश्लीलाला श्लील समजतात. म्हणून या विषयांतलें सत्य आम्ही संक्षेपतः सांगतों, — ज्यांत सर्वांनाच गोडी, तें अश्लील; राहिलेलें श्लील.

□

अश्लीलता

स्त्रीदेहस्य विवस्त्रणं यदि भवेदश्लीलतागोचरं,
पुंदेहस्य कुतस्तथा न तदिति प्राज्ञाः समाचक्षताम्।
'अक्ष्णोऽसौ विदितोऽल्पवस्त्र' इति चेत्,
स्त्रीणामपि स्यात् तथा;
'स्त्रीदेहो' यदि 'कामधुक्षण' इति,
ब्रह्मा ततो दूष्यताम् ॥

अति हि नाम एतेषु दिवसेषु श्लीलाश्लीलचर्वणं कुर्वन्तः दृश्यन्ते कलासाहित्यमार्तण्डाः। तत्र वदामः...।

Obscenity

If feminine nude is to be counted obscene, let the wise explain why the male nude is not. If it is argued that people are used to seeing the male body bare, we

ask, would they not be used to seeing the female one too ? If, again, you argue that the female form ( when unclad ) inflames passion, then why, blame the Creator !

अश्लीलता

स्त्रीदेहाचें वस्त्रहीन चित्रण हें जर अश्लील ठरत असेल, तर पुरुषदेहाचें तें तसें कां नाही, याचें विद्वानांनी उत्तर दिलें पाहिजे 'तो (=पुरुषदेह) तोकड्या वस्त्रांनिशीच दृष्टीला सवयीचा झाला आहे म्हणून,' असें म्हणाल, तर स्त्रीदेहहि तसा सवयीचा होईल की ! 'स्त्रीदेह हा कामोत्तेजक आहे म्हणून,' असें म्हणाल, तर दोष ब्रह्मदेवाला द्या की !





विनोदनानि

अर्थैः केऽपि विनोदयन्ति हृदयं,
केचिच्च सौरैं रसैः,
केचित् काव्यरसैश्च, केऽपि कलहं-
वित्तापहारैः परे ।
रेखाजालचितात्मभालपटले
विन्यस्य हस्तं दृढं
योऽस्योद्वीक्ष्य न वीक्ष्य रिप्टपदवीं
केचित् तु चिन्तागतैः ॥

सौरैः रसैः – सुराभिः । प्रकारपरं बहुवचनम्. वैपुल्यपरं वा, – यथारुचि गृह्यताम् ।



AMUSEMENTS

Some divert their minds by playing dice, some by drinking liquor, some by savouring poetry, others by quarrelling, still others by theft. There are, besides, some who, in calamity, actual or anticipated, divert themselves with care, their hands supporting knitted foreheads.

विरंगुळा

कुणी जुगार खेळून मन रमवितात, कुणी मदिरेचें सेवन करून, कुणी काव्यरस पिऊन, कुणी भांडून, कुणी चोऱ्या करून; पण कुणी मात्र आठ्यांनी भुरकुटलेल्या कपाळावर हात घट्ट धरून, काळजीच काळजी करून मन रिझवितात, — संकट दिसतें म्हणून काळजी, दिसत नाही म्हणून काळजी, संकटाची कल्पना करून काळजी,... काळजी, काळजी, काळजी ... !



श्रद्धा

'ना विष्णुः पृथिवीपतिः,' — यदवदंस्तच्चेन्मृषा कथ्यते,
'सर्वेऽप्यत्र समाः,' इतीयमभिधा सत्येति कः प्रत्ययः ? ।
पूर्वत्रापि जनाः सुखानि विविदुः क्लेशं परत्रापि च;
श्रद्धैव व्यवहारकारणमतः, श्रद्धा च तर्कोत्तरा ॥

FAITH

'The man who rules the earth is God *Vishnu* himself,' – if this doctrine is to be denounced as false, a myth, can anyone prove the truth of the doctrine, 'All are born equal'? People have been happy even under the former doctrine, and miser-

able under the latter. This means : faith alone is the basis of all human dealings; and all faith lies beyond reason.

श्रद्धा

'पृथ्वीचा स्वामी तो ईश्वरांश,' असें जें म्हणत तें जर खोटें, तर 'सर्व लोक सारखे,' हें तत्त्व तरी खरें समजण्यास काय प्रमाण आहे ? पहिल्या तत्त्वाच्या छत्राखालीहि लोक सुखी झाले, आणि दुसऱ्याच्या छत्राखालीहि लोक दुःखी झाले, असें दिसतें. एकूण काय, श्रद्धा हें सर्व व्यवहाराचें मूळ आहे, आणि श्रद्धा ही तर्काच्या निकपापलीकडे आहे.



मूर्खधूर्तौ

धर्मो वस्तु सदित्युशन्ति कतिचित्, तैस्तद्ग्रहावेशतो
'धर्मः सत्य इहैक एव, स ममे'त्येवं प्रतिज्ञायते ।
धर्मः कल्प्यत इत्युपैति विदुषां येषां तु धीर्निश्चयं,
ते धर्मानखिलान् यदन्त्यवितथान्; कः कल्पितेष्वाग्रहः ? ।।

'ममैव धर्मः सत्यः' इति प्रतिपादनं यावत् सत्यमसत्यं वा, तावदेव 'सर्वे धर्माः सत्याः' इत्यपि ।

THE FOOL AND THE CLEVER

Some who think religion real swear ardently : 'There is only one true religion, and that is mine !' The enlightened ones, on the other hand, who are convinced that religion is imaginary, accept all religions to be true; for, what use is it contending for what is after all imaginary !

## मू र्ख आ णि धू र्त

धर्म ही खरी, वास्तव गोष्ट आहे, असें कोणाकोणाला वाटतें. ते या समजुतीचा पगडा मनावर बसल्यामुळे 'या जगांत खरा धर्म एकच, आणि तो म्हणजे माझा,' असें दारयेवर सांगतात. पण धर्म ही कल्पनासृष्ट वस्तु आहे हें ज्या जाणत्यांच्या मनाला उमजतें, ते म्हणतात, 'सगळेच धर्म सत्य आहेत.' खरेंच आहे; जें काल्पनिकच, त्यांत हट्ट कसला ?

□




## ई श्व र स्य पि ता

'धर्मे शास्त्रमिह प्रमाण'मिति चेत्,
शास्त्रस्य कः कारकः ?
'श्रीशः'; तस्य तु कः? 'न कश्चिद्';
अनृतं, श्रीशस्य लोकः पिता ।
तज्ज्ञानात्यलमीश्वरः, न तु जनः;
धर्मस्य शुद्धो ततः
नेशः किं तु जनो रुणद्धि; तदिदं
प्राज्ञाज्ञयोरन्तरम् ॥

## The Father of God

If you say, ' Scriptures are the authority on religion, ' we ask, who made the scriptures ? 'God, ' – all right; and who

made Him ? 'None,' – this is a lie ! Man is the father of God. This, God knows very well; men do not. That is why, when religion faces change, it is men that oppose change, not God. This is where the ignorant differs from the informed.

### ईश्वराचा बाप

'धर्माचें स्वरूप ठरतें तें शास्त्रानें,' असें म्हणत असाल, तर शास्त्राचा कर्ता कोण हो ? 'ईश्वर'; ठीक. त्याचा निर्माता कोण ? 'कोणीच नाही'; साफ खोटें. माणूस हाच ईश्वराचा बाप ! ही गोष्ट ईश्वराला चांगली ठाऊक आहे; माणसाला मात्र ठाऊक नाही. त्यामुळे धर्मसुधारणेला विरोध ईश्वर नव्हे, माणूसच करतो. जाणत्यानेणत्यांमधले अंतर तें हेच !



### देवस्य शुल्कश्रेणी

अक्ष्णैकेन विलोकने दश, तथा द्वाभ्यां कृते विंशतिः,<br>
षष्टिर्गन्धविमर्दने, स्रज उरस्याधापने द्वे शते ।<br>
शुल्कं रूप्यसहस्रमर्धघटिकाभोगार्थमित्यादिभिः<br>
धूर्तैः संप्रति कुट्टनीव्यवसितैर्देवोऽपि वेश्यीकृतः ॥

ननु भोः ! साम्प्रतिके काले सर्वत्रापि सशुल्के स्थिते व्यवहारे देवेनैव केवलेन किमपराद्धम्, यदेवं तस्य शुल्कश्रेणी दूष्यते ? श्रूयताम् । न वयं ब्रूमः देवः अपराध्यति इति । किं तर्हि ? भक्ताः एव । स्थिते चैवं सशुल्के देवे व्यवहारे शुल्कग्राहिणां विटचेटकुट्टनीस्थानीयत्वं शुल्कदायिनां च वेश्यालम्पटस्थानीयत्वं कथं निवारयितुं न्याय्यम् ?

RATES OF GOD

For beholding God with one eye, ten rupees; with two eyes, twenty. For applying unguents, sixty; and for garlanding, two hundred. A thousand rupees for half an hour's service. By these acts of a procurer, rogues have today turned God into a prostitute !

देवाचें दरपत्रक

एका डोळ्यानें दर्शन घ्यायचें असेल, तर दहा रुपये; दोनांनी घ्यायचें झाल्यास वीस; चंदन चोपडण्यासाठीं साठ; छातीवर हार घालण्यास दोनशें; अर्ध्या घटकेच्या भोगासाठीं एक हजार; —याप्रमाणें कुंटिणीचा मार्ग चोखाळून लबाड लोकांनी आज देवालासुद्धां बाजारबसवी करून सोडलें आहे !



भगवता कुलम्

स्पृष्ट्वा पादरजो, विलोक्य वदनं, पीत्वा क्षणं वाक्सुधां
यस्य, स्यात् पुरुषः प्रनष्टदुरितः सर्वं लभेतेप्सितम्।
अद्यत्वेऽपि नृरूपिणां भगवतामुज्जृम्भते तत् कुलं; —
न वराप्यप्रणमय्य शीर्षमयते प्रायः पुमान् निर्वृतिम्॥

नृरूपिणां भगवताम् — यतः एते देवस्य 'अवतार'-त्वेन भक्तैः प्रख्याप्यन्ते । परोत्कर्षासहिष्णवस्तु एतान् बकव्रतिनः बिडालव्रतिनः वा आहुः।

### The Community of the Worshipful

Even today thrives the well-known cummunity of worshipful Gods disguised as men, at the mere touch of the dust of whose feet, at the sight of whose faces, at a momentary sip of whose nectar-like words, man, soon getting rid of all sin, acquires everything that he wishes.

Indeed, no one feels happy unless he bows his head at somebody's feet !

### प्रभूंची मांदियाळी

ज्यांच्या पायाची धूळ मस्तकी धरली, मुखदर्शन घेतले, शब्द-सुधा क्षणभरदेखील प्राशन केली, की माणसाचें सर्व पातक नष्ट होऊन त्याला इष्ट ते सर्व प्राप्त होतें, अशी त्या नरदेहधारी प्रभूंची मांदियाळी आजघडीलाहि फोफावत आहे. एकंदरीने हेच खरे की, कुठेतरी डोके टेकल्यावाचून बहुतेक-करून माणसाला शांति वाटत नाही !



### सर्वं शून्यम्

‘सर्वं शून्यमिदं,’ जगाद सुगतो, लोकेऽग्रजन्मान्यतां,
पूज्यं तन्नखकेशदन्तमभवत्, संघोऽस्य चास्फायत ।
तत् किं बुद्धनखादिसंघवचने नासज्यते शून्यता ?
किं वाऽत्रापि चकास्ति विश्वविदिता शून्ये जनानां रतिः ? ॥

तृतीयचरणे बुद्धः, नखादीनि, संघः, वचनं ( अर्थात् बुद्धस्य ) च एतेषां समाहारः कर्तव्यः ।

### ALL IS VOID

'All is void,' – said the *Buddha*, and became renowned. His nails, hair and teeth came to be worshipped; and his organisation throve. Does this mean that the all-pervading void does not extend over the *Buddha's* nails etc. ? Or does this substantiate the universally known fact that people pursue the void ?

### सारें असार

'हें सारें असार आहे,' बुद्ध म्हणाला, जगांत मान्यता पावला, त्याचे नखें-केस-दात पूजार्ह ठरले, आणि त्याचा संघहि सर्वत्र फोफावला. आम्ही विचारतों की, ही सार्‍या ठिकाणीं असणारी असारत बुद्ध, त्याची नखें वगैरे, त्याचा संघ, त्याचा उपदेश यांच्या ठिकाणीं विसावते की नाही ? का लोकांना असाराचीच ओढ असते, हें विश्वविख्यात तत्त्व याहि उदाहरणांत प्रकटलें आहे ?



### सुन्दरी

जानाना अपि 'वानरी 'ति जगदुर्नारीं जनाः सुन्दरीं
यद् दाक्षिण्यवशात् तथैव तदिति स्त्री सस्मितं यद्दधे ।
यत्त्वे किल मन्त्रिणामपि मुखाद् 'हे सुन्दरी 'त्युदितां
गां सुन्दर्यपि धिक्करोति सवसि, श्रद्धेयमेतत् कथम् ? ॥

सुन्दरी — फेअर लेडी । महाराष्ट्रराज्यस्य विधानसभायां किल अयं प्रसङ्गः समुद्भूत् । मन्त्रिणामपि — अपरपरमेश्वराणामिति भावः । केचित् तु आहुः, मन्त्रिमुखोद्गतत्वमेव धिक्कृतौ हेतुः । कः/का खलु प्राज्ञः/प्राज्ञा मन्त्रिणां वचसि विश्वासं कुर्यात् ?

FAIR LADY

In the past, men used to call a woman 'fair lady' out of chivalry, even when they knew her to be really a she-monkey; and the woman, too, with a smiling face, believed their words. Today, it is reported, even a fair lady publicly denounces her being addressed as 'fair lady' even when the phrase springs from the lips of such a dignitary as a minister! We wonder, how to *believe this!*

'सुंदरी'

आजपर्यंत असे झाले की, वानरी वाटत असतानाहि लोक स्त्रीला दाक्षिण्यामुळे 'सुंदरी' म्हणत आले; आणि स्त्रीहि स्मित करून तें खरें समजली. आजकाल मात्र मंत्र्यांच्यासुद्धा (म्हणजे, साक्षात् परमेश्वराच्याच की!) तोंडून 'सुंदरी' (फेअर लेडी) असे शब्द उमटलेले ऐकून सुंदरीदेखील म्हणे भर सभेंत त्याचा धिक्कार करू लागल्या आहेत ! आता यावर विश्वास तरी कसा ठेवावा ?

□

सिनेसुन्दरी

'दृष्ट्याकेकरया शतं, दशशतं गत्या नतोन्नतया,
लक्षार्धं किल नर्तनैः, परिमितैर्वस्त्रैश्च लक्षद्वयम्।
सा कापि प्रतिचित्रमर्जति बत ! द्रव्यं सिनेसुन्दरी,
किं चाभ्रंलिह–' सर्वमस्तु, वद सा भोज्यं कियत् खादति ?

अस्तु नाम अर्जनशक्तिः अपरिमिता; भोगशक्तिस्तु नृणां परिमितैव, इति तात्पर्यम्।

THE FILM STAR

'Heard this ? That X Y Z, the famous actress, charges a hundred for casting just a sidelong glance ; a thousand for a hip-swinging gait ; half a lakh for dancing ; two lakhs for wearing the minimum clothes. At this rate, indeed, she makes money in every picture ! Besides, a sky-scraping —'

'Well, well ! Granting all that, tell me how much she eats.'

सिनेसुंदरी

एक आवाज –'अहो, ऐकलंत का ? ती अमकीतमकी सिनेतारी प्रत्येक चित्राच्या वेळीं काय कमाई करते ! तिरपी नजर टाकली की शंभर; लचकत मुरडत चालली की हजार ! नाचाला पन्नास हजार ; आणि मापक कपडे घातले की दोन लाख ! आणि म्हणे टोलेजंग –'

दुसरा आवाज – 'हो हो हो, ठीक आहे. पण ती भात केवढा खाते सांग !'

वर्णव्यत्ययः

अप्राप्तोपचयं निशम्य मथितं सत्त्वोज्ज्वलं जीवनं
सद्यो विश्वमभूद् विमूढमखिलं मग्नं च शोकार्णवे ।
तत्रोच्चैः करतालमत्तहसितैश्चीनाः क्षणं कुर्वते, –
वर्णव्यत्ययमात्रतः क्वचन किं नीचत्वमाच्छाद्यते ? ॥

सत्त्वोज्ज्वलं जीवनम् – अमेरिकाध्यक्षस्य तत्रभवतः केनेडीमहाभागस्य । क्षणम् – उत्सवम् । वर्णव्यत्ययः – 'चीन 'शब्दः ' नीच 'शब्दात् वर्णविपर्यासेन आगतः इति मन्यामहे ।

METATHESIS

At the news of the sudden end of a bright life of virtue and courage, the whole world was stunned and sank into an ocean of grief ! On this occasion, what did the Chinese do ? They celebrated it with loud clapping of hands and roars of laughter ! Indeed, can a mere metathesis( *Nicha-China* ) conceal the baseness of a people ?

वर्णविपर्यय

शौर्यधैर्यांनी उजळलेलें एक जीवनपुष्प पूर्ण विकास होण्याआधीच कुस्करलेले पाहतांच सारें जग सुन्न होऊन दुःखसागरांत बुडून गेलें ; पर चीन मात्र मोठ्याने टाळ्या पिटून आणि खदखदा हसून सण साजरा करण्यांत दंग झाला !

बरोबरच आहे. ( नांवांतल्या ) अक्षरांची उलटापालट केली ( नीच – चीन ) म्हणून काय कोठे नीचपणा झाकून राहतो ?

□

मानवस्य आग्रहः

जीवो, ब्रह्म, तदैक्यम्, अस्य जगतो जन्मादिहेतुश्च तत्,
तज्ज्ञानादपवर्गः, – एतदखिलं को वेद सत्यं न वा।
सत्यं नूनमिहैकमेव, – विषयो वादस्य नैवास्ति यत्, –
जानाम्यस्मि करोमि चेति सततं यन्मानवस्याग्रहः ॥

MAN'S OBSTINACY

*Jiva* the individnal soul, *Brahman* the universal soul, their essential unity, the *Brahman* causing the production etc. of the world, the emancipation resulting from the realisation of it; – who knows whether all this is real or not ! The only real thing beyond dispute is man's constant obstinacy in proving that it is he who knows, is and does !

माणसाचा हट्ट

जीव, ब्रह्म, त्याची अभिन्नता, ब्रह्म जगत्कारण वगैरे, त्यांच्या ज्ञानाने मोक्ष, – हें सगळें खरें कीं नाही कोणाला ठाऊक ! खरी गोष्ट बहुधा एकच, आणि ती निर्विवादहि आहे; ती म्हणजे 'मला कळतें, मी आहें, मी करतों,' हा माणसाचा सदोदित चाललेला हट्ट !



विफलं जन्म

नास्माभिर्नरशोणितैं रणभुवां दत्तोऽभिषेकोत्सवः,
प्रासादाश्च न खस्पृशो विरचिता हृत्वा जनानां धनम्।

द्वैताद्वैतविमर्दनाय कलहैः कण्ठा न शुष्कीकृताः, –
मातुर्यौवनसंपदोऽपहरणे चौरा वयं केवलम्! ॥

आह भर्तृहरिः – 'मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम्।' तदेवात्र शब्दान्तरैः प्रतिपिपादयिषितम्।

VAIN LIFE

We did not bathe the battlefields in human blood. Nor did we erect sky-scraping palaces by robbing the people. We did not even shot ourselves hoarse in disputing dualism or monism. We thus stand only as thieves who robbed their mother of her wealth of youth!

व्यर्थ जिणे

आम्हीं माणसांच्या रक्ताच्या नद्या वाहवून रणभूमीला न्हाऊं घातलें नाही, कीं लोकांना नागवून मिळविलेल्या पैशाने गगनचुंबी हवेल्या बांधल्या नाहीत, कीं द्वैताची किंवा अद्वैताची फुळपाण करण्यासाठी घसेहि कोरडे केले नाहीत. एकूण काय, तर आईच्या उदरीं जन्माला येऊन तिचें तारुण्यधन हिरावणारे आम्ही केवळ चोर आहों!

□

## १२. अञ्जलिबन्धः

### WITH FOLDED HANDS

### दोन्ही कर जोडून

मन्दिरप्रवेशः

स्पृष्टं स्त्रीविटचेटशूद्रयवनैर्गीर्वाणवाङ्मन्दिरं
भ्रष्टं स्यादिति तालयन्त्रितमिदं कुर्वन्ति, तेभ्यो नमः ।
किं गालीषु, किमर्चनेषु, किमु वा शास्त्रेषु, किं प्रेमसु, –
सर्वे संस्कृतभाषिणो यदि, तदा देवाय कुर्यां बलिम् ॥

ADMISSION TO THE TEMPLE

We bow to those who lock the temple of the Sanskrit language out of the fear that it will be desecrated if touched by women, paramours, servants, low caste people and non-Aryans. I would really make an offering to God if all start speaking Sanskrit,

– no matter if it is used for praise or abuse, *for scientific discussions or the lovers'* nonsense !

### मं दि र प्र वे श

वायका, तमासगीर, वारगीर, महार-मांग, अविंध यांचा स्पर्श झाला तर संस्कृत वाणीचें मंदिर विटाळेल, म्हणून जे त्याला टाळें लावतात, त्यांना साष्टांग नमस्कार असो ! मी मात्र हे सर्व-जण संस्कृत बोलूं लागले, तर देवाला पूजा बांधीन ; – मग ते संस्कृतांत शिव्या देवोत किंवा सन्मान करोत, शास्त्रार्थ करोत किंवा प्रेमाच्या बडबडी करोत !



ॐ शा न्तिः शा न्तिः शा न्तिः

शं नः सन्त्विह मन्त्रिणः, शमपि तद्द्वाररक्षिणः सन्तु नः,
शं गुण्डाः, भिषजश्च शं, धनहराः शं, शं च नो रक्षकाः ।
शं नः सा पुरपालिका, शमपि नः कृष्णापणाधीश्वराः,
शं नः कर्मकराः, नमोऽस्तु च इदं ! मा नो यविष्टेश्वराः ॥

'शं नो मित्रः शं वरुणः' इत्यादि वैदिकम् आशासनम् अद्यतने युगे 'यातयामं गतरसं पूति पर्युषितं च '।

Benediction

May the ministers have mercy on us, may their *chóparasis*, may the goondas, may the doctors, may the thieves, may the

police, may the Municipality/Corporation, may the princes of the black market, and may also the servants ! Our salutations to you all ! My lords, do not murder us !!

'प सा य दा न'

मंत्री आमच्यावर कृपा करोत ! त्यांच्या दारावरचे शिपाईहि कृपा करोत ! गुंड कृपा करोत; डॉक्टर कृपा करोत; चोर करोत, शिपाई करोत ! नगरपालिका/महानगरपालिका आमच्यावर दया करो, आणि काळाबाजारवालेहि करोत ! नोकर-चाकर कृपा करोत ! तुम्हां सर्वांना आमचें लोटांगण ! मायबाप, आम्हांला मारूं नका !!



अर्पणम् (तर्पणम्?)

विसंष्ठुलस्वभावा ये गडुपृष्ठा जलोदराः ।
तेभ्योऽस्तु कण्टकाग्रिभ्यो भूतेभ्य इदमर्पितम् ॥

अत्र 'केयं व्याकुलता' इत्यादिः द्वितीयः श्लोकः द्रष्टव्यः। ननु 'नवनीतिशतकम्' इति हि अस्य कण्टकाञ्जलेः नामान्तरं कृतम्; सन्ति चात्र बहवः श्लोकाः अधिकाः। कथमेतत् ? – उच्यते। आम्रादिविक्रयिणामिव इदमस्माकं शतकं द्रष्टव्यम्। अथवा 'प्रास्ताविकं शब्दद्वयं' यथा शब्दसहस्रद्वयं संपद्यते तथेदं ज्ञातव्यम्। किंवा, शतकण्टकग्राहिभ्यः अयम् अधिकश्लोकात्मकः 'बोनसः' (अधिकांशः) अस्तु।

DEDICATION

This composition is dedicated to the thornivorous creatures, who are crooked by nature, have a hump on their back, and store a lakeful of water in the belly.

समर्पण

जे स्वभावतः वेडेवाकडे आहेत, पाठीवर कुबड आणि पोटांत पाण्याचें तळें वाहणारे आहेत, त्या कांटेखाऊ प्राण्यांना ( तसेंच, समंधांना ) हें कवन अर्पण केलें आहे.



॥ श्री-उष्ट्रार्पणमस्तु ॥

# परिशिष्टम्

SUPPLEMENT

पुरवणी

'वारे वारिविधानकेन्द्रम्' —रामराज्यपद्धतिः

नित्यं पुण्यपुरी 'जलं जल'मिति क्रन्दत्यखण्डस्वरं,
दृष्ट्वा जातदयैश्चिरेण विभुभिः सेत्यं समाश्वासिता –
'आम्, एवं क्रियते – क्रमेलशतं तावत्त्विदं गृह्यताम्,
"वारे वारिविधानकेन्द्र"मचिरात् – यद्वत्त – निर्मास्यते।
पोष्या गोमहिषान्वया अगणिता यस्मिन् घटोघ्नीघटाः,
शुद्धं मुद्रितबाटलीषु सुलभं लोकस्य च स्याज्जलम्'॥

'VAAREY WATER COLONY'

Seeing that the city of Poona is constantly crying for water, the authorities took pity on it after a long time and made promises as follows :

'Well, this is what we can do for you For the time being, we shall send you a hundred camels (Camels are known to store plenty of water in their stomach !) Rest assured that, before long, we shall erect nearby one *Vaarey Water Colony* (similar to the *Aarey Milk Colony*) Innumerable herds of cows and she-buffalos with udders as big as pitchers will be brought up there, and people will easily secure from there pure water in sealed bottles '

'वारे पाणी-उत्पादन-केंद्र'

'पाणी, पाणी' असा पुण्यनगरीचा अखंड आक्रोश चाललेला पाहून कित्येक दिवसांनी अधिकाऱ्यांचे चित्त द्रवले, आणि त्यांनी तिला असे आश्वासन दिले –

'ठीक आम्ही आता असं करतो तूर्त (पाण्याची तहान भागविण्यासाठी) हे शंभर उंट घ्या (उंटाच्या पोटात बरेच पाणी मावते म्हणतात !) लवकरच जवळपास ('आरे दूध उत्पादन-केंद्रा सारखें) 'वारे पाणी उत्पादन-केंद्र' आम्ही उभारू –विश्वास ठेवा ! या केंद्रात घागरीएवढ्या कासेच्या गाईम्हशींचे असंख्य खिल्लारे पोसली जातील आणि लोकांना मोहोरबंद बाटल्यातून वाटेल तितके शुद्ध पाणी मिळू शकेल '



विडंबनाम —जगदेव राष्ट्रपद्धति

'नान्यन्न शरण विना रशियया', 'नान्यद् विनामेरिकाम्'— इत्या नामितलाञ्जना कलाकल स्वच्छन्दत कुर्वते।

स्वप्नो यास्यति चेदयं सफलतां तेषां यदृच्छावशात्,
– शङ्का नास्ति – 'विएतनाम' विभवैः संगंस्यते भारतम् ।
'औदीच्या' इति, 'दक्षिणाजुष' इति द्वेषाज्ज्वलन्तो जनाः
प्राशिष्यन्ति परस्परस्य रुधिरं, संपत्स्यते भस्म भूः ! ॥

VIETNAM

'We have no other shelter than Russia;' 'None else but America;'– thus do different people shout at will at the top of their voice. If, by any chance, their dreams come true, India will no doubt enjoy the prosperity that prevails in Vietnam today ! Thus, shouting 'We belong to the North,' or 'We belong to the South,' and burning with bitter hatred, people will fly at one another's throat and the land will be simply reduced to ashes !

विएतनाम आणि भारत

'आपल्याला रशियाखेरीज अन्य तरणोपाय नाही !'
'साफ चूक. आपल्याला अमेरिकेवाचून अन्य गति नाही !'
याप्रमाणे लोक बेंबीच्या देठापासून यथेच्छ आक्रोश करीत भमतात. जर दैवयोगाने त्यांचीं हीं स्वप्नें सत्यसृष्टींत उतरलीं तर – शंकाच नको ! – विएतनाममधली भरभराट भारतांत अवतरेल ! आणि –

आणि 'आम्ही उत्तरेंतले !', 'आम्ही दक्षिणेंतले !' असे गरजत, द्वेषानें पेटलेले लोक एकमेकांच्या नरडीचा घोट घेऊं लागतील ! आणि भूमि ? – भूमीची राखरांगोळी होईल !!

सर्वशक्तिः वाक् ;—लोकायणीपद्धतिः

सृष्टौ कश्चन, कश्चनाप्यधिकृतः क्षेमे, क्षये कश्चन,
ब्रह्माण्डस्य किलास्य केचिदबुधाः कार्यं विभक्तिं जगुः।
शक्तिं वाक् प्रकटय्य पूर्वमुभयोः, कृत्वाधुना च क्षयं
सामानाधिकरण्यमाविरकरोत् कार्यत्रयस्यात्मनि ॥

THE OMNIPOTENT SPEECH

Of this vast universe, someone (i. e. *Brahmadeva*) is appointed for creation, another (i. e. *Vishnu*) for its sustenance, and yet another (i. e. *Shiva*) for its destruction, – thus some fools have made a division of work. Speech, however, having already manifested its potency in regard to the first two functions, and now undertaking destruction, has conclusively proved that all the three functions are exclusively vested in it! (This refers to the recent linguistic riots in the South.)

सर्वसमर्थ भाषा

या ब्रह्मांडाच्या म्हणे उत्पत्तीच्या कामीं कोणा एकाची (ब्रह्मदेवाची) नेमणूक झाली आहे; राखणीच्या कामीं दुसऱ्या कोणाची (विष्णूची); संहाराच्या कामी आणखी कोणाची तरी (रुद्राची); – अशी कांही वेडपटांनी जगाच्या कामांची वाटणी करून टाकली आहे. वस्तुतः यापैकी पहिल्या दोन कार्यांत आपली शक्ति भाषेने यापूर्वीच प्रकट केली असून आज तिने प्रलयहि मांडला आहे; आणि अशा प्रकारे ही तिन्ही कार्ये एकट्या आपल्यांच हातीं असल्याचें सिद्ध केलें आहे.

### स्रोतिसम्पः

—जीवनोद्योगपद्धतिः

‘सम्पे शक्तिरवस्थिता कलियुगे’–स्मृत्वेति नूत्नां स्मृतिं
सर्वस्रोतिगणः पुरेऽत्र सहसाकार्षीज्जलस्तम्भनम् ।
प्रास्तौषीत् समयं च–‘कार्यविरतिर्वर्षस्य षाण्मासिकी,
घण्टामात्रमुपस्थितिः प्रतिदिनं, त्रैमासिको बोनसः’ ॥

### Strike of the Water-Taps

‘Strike is power in this age of *Kali*,’– knowing this doctrine of the modern ethical code, all the taps in this city ( of Poona ) suddenly struck work. They made the following demands : ‘Six months’ Privilege Leave every year; duty–one hour a day; and three months’ bonus’ !

### नळांचा संप

‘संघे शक्तिः कलौ युगे ! – कलियुगांत बळ संपामध्ये’ हें नव्या स्मृतींतलें वचन ध्यानांत घेऊन या पुण्यपुरींतले सगळे नळ एकाएकी (ऐटपा) संपावर गेले. त्यांनी आपल्या मागण्या मांडल्या, – ‘वर्षांतून सहा महिने रजा. रोज फक्त एक तास काम. तीन महिन्यांचा बोनस.’



### व्याख्यानम्

—विद्याधिपार्थिवपद्धतिः

विख्याता विदुषां पुरीति, विषयः पूज्यो जनानामिति,
वक्ता दूरत एष्यतीति, फलकाः सर्वत्र संसज्जिताः ।
क्लृप्तो मण्डप आयतो, विनिहितास्तारकाः स्वरक्षेपकाः,

श्रोतारो दश पञ्च !
'भूर्गिलतु मां !'– संयोजकः काङ्क्षति ॥

A Mammoth Speech Programme

Considering that this is a reputed city of the learned, and that the appointed topic is esteemed by the people, and that the speaker is coming from afar, placards announcing details of the talk were exhibited everywhere; a spacious pandal was constructed; amplifiers of a very high capacity were fixed. (Everything was perfectly arranged. The clock struck the hour of the speech; but alas !) There were only five or ten listeners ! How fervantly did the organiser of the programme prayed in his mind : 'O Mother Earth ! Take me in, this very moment !'

टोलेजंग व्याख्यान

गाव विद्वानांचे आगर; विषय सर्व लोकांच्या आदराला पात्र असा; व्याख्याता फार दुरून आणविलेला;– हें सर्व लक्षात घेऊन संयोजकांनी सगळीकडे मोठाले फलक लटकावले. भला मोठा मांडव घातला. करड्या आवाजाचे ध्वनिक्षेपक लावले.

व्याख्यानाची घटका भरली. श्रोते सगळे दहापांच होते ! संयोजकांच्या मनात जप चालला होता, – 'धरणी माते, घे मला पोटात !'

□

# परिशुद्धिः, परिवृद्धिः

प्रथमः अङ्कः पृष्ठस्य । तदुत्तरं रेखायाः परतः अङ्कः पङ्क्तेः । परिशुद्धिः 'आदेश'रूपा । परिवृद्धिः 'आगम'-रूपा । आदेशे विवक्षिते अशुद्धः 'स्थानी' न निर्दिश्यते; स हि स्वस्थाने उपलभ्येतैव, 'उक्तार्थानां हि अप्रयोगः' । आगमे तु विवक्षिते यस्मात् परतः स इष्यते, स शब्दः कुण्डलयोः (brackets) मध्ये निर्दिश्यते ।

| | |
|---|---|
| ०१३–२५ | : प्रमुदितो भृशमन्तरात्मा |
| ०४१–७ | : संभूय |
| ०४१–१२ | : कुन्दूं |
| १६–७ | : (virtues) ? |
| २०–(चरमा) | : इत्यादिश्रुतिः |
| २४–२ | : हें मिळत |
| ३१–१४ | : (मोक्षः।) द र नि – भ्वादिः दृ-धातुः भये प्रसिद्धः । |
| ३२–२४ | : (रॉकेलसाठी,) ही पाण्यासाठी, |
| ४८–१९ | : (फोड,) वस्तु / पैसा |
| ४९–१५ | : जलचर प्राणी, |
| ५९–२ | : दशमभाके |
| ६५–२० | : (पाणिनिः। ) अत्र पूरणिका – इदं सूत्रं संप्रति निरवकाशम्; अधुना लङ्कापतेः (अर्थात् सिंहला-मात्यस्य) स्त्रीरत्नाभावात् । तथापि श्लोकः भूतार्थं निर्दिशति; तेन नास्य वाच्यता शङ्कनीया । ननु का अत्र सीता ? – सिंहलस्थाः भारतीयाः स्युः । |

५–१८ : मेर्लोच !

९२–४ : funeral

९२–२१ : मिसगाइडेड

९२–२३ : Misguided

११०–२१ : दिशांश्च सततं

११३–५ : लीये घनब्रह्मणि ! ॥

१२१–८ : (श्लोकानन्तरं टिप्पनी –) किमयं 'सुधाह्रदः संस्कृतविद्याध्ययनं स्यात् ? स्यादपि । एवं हि संस्कृतपण्डिताः मन्यन्ते (न तु प्रकाशम् अङ्गीकुर्वन्ति) ।

१३०–२ : ग्रन्थ ! त्वदीया

१३४–१४ : (सुरसरित् ।) इयं भागीरथ्याः अपि संज्ञा स्यात् ।

१६०–१० : (इतिहासपण्डिताः) 'दोजवलकर'नामानः । अत्र दृश्यताम् – 'सत्यकथा'-मासिकम्, फेब्रु. १९६४; श्री. सदाशिव-आठवले-महाभागानां लेखः ।

१६१–२१ : sentence

१६४–२० : sisters

१७०–१३ : हृदयं

१८८–४ : वमेलवनातं

१९०–५ : (श्लोकस्य टिप्पनी –) इदं पद्यम् अद्यापि अपर्युषितं दक्षिणभारतीयानां हिन्दीविरोधिनं प्रक्षोभम् अधिकरोति, यस्मिन् महाजनानामपि स्पर्धेषुः आसीत् – 'हिन्दी व्रजतु गह्वरम् ! ' इति ।
(श्लोकस्य टिप्पनी – ) अत्र पूरणिका – संयोजकः शब्दानि, – सत्यम्; यावत् व्याख्यानान्तरं न संयोजयति । संयोजिते च व्याख्यानान्तरे पुनरपि 'माता यथापूर्वमवलम्बम्' भवति । अन्ते विधौ वा मतिः ?